संख्या ६, ७]    VOL. XVII.    [No. 6, 7.



# आर्ष-ग्रन्थावलिः ।

## साम वेदीय-

## आर्षेय कल्पम् ।

# क्षुद्रसूत्रम्

सम्पादकः-पं० राजाराम प्रोफेसर

डी० ए० वी० कालेज लाहौर ।

... सन् १९२१-आषाढ़, श्रावण सं० १९७८

... शर्म्मा के अधिकार से बाम्बे मैशीन ... पं० राजारामजी के लिए छपा ।

मूल्यम् ॥)

# निवेदन ।

सामवेद के आर्षेयकल्प में दो सूत्र ग्रन्थ हैं। एक मशककल्प-सूत्र, दूसरा क्षुद्र सूत्र। मशक कल्पसूत्रके तो नाम से ही स्पष्ट है, कि इसके कर्ता मशक ऋषि हैं। क्षुद्र सूत्रके कर्ता भी मशक ही हैं, यह बात लाट्यायन सूत्र ६ । १ । १७ पर भाष्य करते हुए अग्नि स्वामी ने दिखलाई है, जहां उसने क्षुद्र सूत्र २ । १७ का प्रमाण देते हुए, उस प्रमाण को मशक के नाम से उद्धृत किया है। लाट्यायन् ७ । ६ । १४ में और वंश ब्राह्मण में मशक के साथ गार्ग्य शब्द होने से सम्भवतः यही मशक गर्ग गोत्री मालूम देता है।

सामवेद के ये दोनों कल्पग्रन्थ लुप्त प्राय होरहे थे। १९०८ में शार्मण्यदेशोत्पन्न प्रोफैसर डब्ल्यू कैलैण्ड (W. Caland.) ने कतिपय हस्तलिखित प्रतियों के आधार पर इन दोनों का, पहले पहल लीपजिग (Leipzig) रोमन अक्षरों में सम्पादन किया। पर अभी तक नागराक्षरों में ये कहीं नहीं छपे थे। इस अभाव को दूर करने के लिए हम ने क्षुद्रसूत्र को रोमन लिपि से नागरी लिपि में परिवर्तित किया है।

इस ग्रन्थ के छापने में हम प्रोफैसर डब्ल्यूकैलैण्ड महोदय के अतीव अनुगृहीत हैं, जिन्हों ने बड़े परिश्रम से इसको रोमन लिपि में मुद्रित किया, और फिर इसको नागरी लिपि में मुद्रित करने की उदार हृदय से हमें अनुज्ञा दी।

इस कार्य में मैं अपने मित्र लाला ज्ञानचन्द जी भाटिया बी. ए और पं० भगवद्दत्त जी रीसर्चसकालर बी. ए. का भी अनुगृहीत हूं, जिन्हों ने इसको रोमन से नागरी वेष पहनाने में पूर्ण सहायता दी है। इसका परूफ मैंने स्वयं मूल ग्रन्थके साथ मिला २ कर शोधा है। और इस पहले संस्करण में मूलमात्र ज्यों का त्यों प्रकाशित कर दिया है। यदि विद्यानुरागियों ने अपनी रुचि दिखलाई, तो वे दूसरे संस्करण में इसको भाषानुवाद सहित अपने सम्मुख देखेंगे। राजाराम

* ओ३म् *

# क्षुद्रसूत्रम् ।

## ग्रामकामस्य क्लृप्तो ज्योतिष्टोमः ।

प्रजाकामस्योपोषु जातमधुरमिति स्तोत्रीयो नौधसस्यर्क्षु जनित्रं ब्रह्मसाम न हि वश्चरमं चनेत्येतयोः पूर्वं निर्मध्या सप्तदशस्य विष्टुतिरूर्ध्वं होतुः पृष्ठात् । समानमितरं ज्योतिष्टोमेन । याँ समां महादेवः पशून् हन्यात् स नः पवस्व शंगव इति स्तोत्रीय आवृत्तस्तृचो नौधसस्यर्क्ष्वाथर्वणं ब्रह्मसामोद्यतो विष्टुतयः । समानमितरं ज्योतिष्टोमेन ।

श्रैष्ठ्यकामस्याग्नियवती प्रतिपद् । बार्हतान्याज्यानि बृहत्पृष्ठँ श्यैतं ब्रह्मसाम श्रुध्यमुष्णिहि समानमितरं ज्योतिष्टोमेन । बहूनामसखीनां यजमानानामेते असृग्रमिन्दव इति स्तोत्रीयः सप्तास्थिता सप्तदशस्य विष्टुतिः पृष्ठानाँ समानमितरं ज्योतिष्टोमेन । सखीनां यजमानानां दविद्युततया रुचेति स्तोत्रीय उपास्मै गायता नर इत्यनुरूपः । सप्तास्थिता सप्तदशस्य विष्टुतिः पृष्ठानाँ समानमितरं ज्योतिष्टोमेन ।

दीक्षिते प्रेतेऽग्न आयूँषि पवस इति प्रतिपदन्यत्र व्यूढेभ्योऽहोभ्यो व्यूढेषु चेत् प्रेयाद् यदेव ततो गायत्रीप्रतिपत्कमहः स्यात् तस्यैषा प्रतिपदन्यत्रोदयनीयादतिरात्रात् । समानमितरं ष्टोमेन ॥१॥

ज्योगामयाविन आ नो मित्रावरुणा दविद्युततया रुचा पवमानस्य ते कव इति तृचक्लृप्तं बहिष्पवमानम् । आ नो मित्रावरुणा पवस्व वाचो अग्रिय उपास्मै गायता नर इति सम्भार्यस्तोत्रीय इति वाग्न आ याहि वीतय इति राथन्तरं त्रीणि बार्हतान्यग्निं दूतं वृणीमह इति पूर्वे बार्हते उत्तरे राथन्तरे इति वा पुनानः सोम धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्वद् वा प्राजापत्यं त एकर्चा रथन्तरं तिसृषु बृहत् पृष्ठं त्रैशोकं ब्रह्मसामेन्द्रं विश्वा अवीवृधन्निति कालेयमुपशिक्षापतस्थुषा इति सफँ श्रुध्यमुष्णिहि ककुभावुत्तरे रथंतरस्य करोति ब्रह्मायतनीया सप्तदशस्य विष्टुतिर्होतुः पृष्ठस्योद्यत्येकविँशस्य विष्टुतिरग्निष्टोमसाम्नः । समानमितरं ज्योतिष्टोमेन ।

तस्य सम्पत् षोडशाक्षराणि रथंतराल्लुप्यन्ते तावता ब्रह्मायतनीया गर्भिणीमतिरिच्यते तत् सम्पन्नं सप्ततिरक्षराणि त्रैशोकादतिरिच्यन्ते तावत् सफकालेयाभ्यां लुप्यते तत् सम्पन्नम् । अनृतमभिशस्यमानस्यापघ्नन् पवते मृधा इति स्तोत्रीयो नौधसस्यर्क्षु शुद्धाशुद्धीयं ब्रह्मसाम यत् पदनिधानँ सूर्म्येकविँशस्य विष्टुतिरग्निष्टोमसाम्नः । समानमितरं ज्योतिष्टोमेन ।

राज्ञो यजमानस्य वृषा पवस्व धारयेति स्तोत्रीयः श्येतस्यर्क्षु वृषा ब्रह्मसामैकवृषं यद्येकराजः । समानमितरं श्रैष्ठ्यकामेन जन ईत्सर्तः पवस्वेन्दो वृषा सुत इति स्तोत्रीयः । समानमितरं श्रैष्ठ्यकामेन ॥ २ ॥

द्वयोर्यजमानयो र्युवँ हि स्थः स्वःपती इति स्तोत्रीय आवृत्तस्तृचः पुनानः सोम धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्वद् वा प्राजापत्यं त एकर्चा अश्विनोर्व्रतं तिसृषु यत्

पूर्वं पुरोजिती वो अन्धस इति श्यावाश्वमान्धीगवमौदलं त एकर्चा अश्विनोर्व्रतं तिसृषु यदुत्तरं समानमितरं ज्योतिष्टोमेन ।

वृष्टिकामस्य प्रास्य धारा अक्षरन्निति स्तोत्रीयः पुनानः सोम धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्द् वा प्राजापत्यं त एकर्चा अपां व्रतं तिसृषु यत् पूर्वं नौधसस्यर्क्षु सौभरं ब्रह्मसाम हीषि इति-निधनं पुरोजिती वो अन्धस इति श्यावाश्वमान्धीगवमौदलं त एकर्चा अपां व्रतं तिसृषु यदुत्तरं समानमितरं ज्योतिष्टोमेन ।

जन्या गा विवित्समानस्य तया पवस्व धारया यया गाव इहागमन्निति स्तोत्रीयः पुनानः सोम धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्वद्द् वा प्राजापत्यं त एकर्चा गवां व्रतं तिसृषु यत्-पूर्वं त्रैककुभं ब्रह्मसाम त्वमङ्ग प्रशँसिष इत्येतासु स्वादिष्ठया मदिष्ठयेति गायत्रं सँहितं सत्रासाहीयं त एकर्चा गवां व्रतं तिसृषु यदुत्तरं समानमितरं ज्योतिष्टोमेनेति प्रातिपदाः ॥३॥

अथातो ब्रह्मसामिकाः क्लृप्तौ श्येतनौधसब्रह्मसामानाव-भिचरतः श्येनस्य प्रतिपच्चाज्यानि च पुनानः सोम धारयेति रौरवमेकस्या मभिनिधनं काण्वमेकस्यां दैर्घश्रवसमेकस्या-मुद्वद्द् वा प्राजापत्यं यौधाजयं तिसृषु वषट्कारनिधनं ब्रह्म-सामैष ब्रह्मा य ऋत्विय इति कालेयम् । अभिचरणीया विष्टुतयः समानमितरम् । तस्य सम्पत् सप्तदश विंशत्यक्षराणि वषट्कार-निधनादतिरिच्यन्ते तावत् कालेयाल्लुप्यते तत् संपन्नम् ।

क्लृप्तः पशुकामस्य । क्लृप्तो ज्योगामयाविनः । प्रति-ष्ठाकामस्य नौधसस्यर्क्ष्वौष्कारनिधनं काण्वं ब्रह्मसाम समा-नमितरं ज्योतिष्टोमेन । क्लृप्तः प्रजाकामस्य ।

लोककामस्य नौधसस्यर्क्ष्वाथर्वणं ब्रह्मसामोद्वत्सो

विष्टुतयः । समानमितरं ज्योतिष्टोमेनेति । यदि रथंतरपृष्ठोऽथ यदि बृहत्पृष्ठोऽग्निर्यवती प्रतिपद् । बार्हतान्याज्यानि बृहत् पृष्ठँ, श्यैतस्यर्क्ष्वाथर्वणं ब्रह्मसाम । श्रुध्यमुष्णिहाद्युत्यो विष्टुतयः । समानमितरं ज्योतिष्टोमेन ।

भ्रातृव्यवतोऽभीवर्तो ब्रह्मसामाभिचरणीया विष्टुतयः । समानमितरं ज्योतिष्टोमेन ।

यज्ञविभ्रष्टस्य श्रायन्तीयं ब्रह्मसाम । वयमु त्वामपूर्व्येति कालेयँ समानमितरं ज्योतिष्टोमेन । तस्य संपत् । सप्तदशाष्टाक्षराणि श्रायन्तीयादतिरिच्यन्ते तावत् कालेयाल्लुप्यते तत् सम्पन्नम् ।

योनेर्यज्ञं प्रतन्वानस्य यज्ञायज्ञीयं बहिष्पवमानम् । स सुन्वे यो वसूनामुपशिक्षापतस्थुष इति सफपौष्कले यज्ञायज्ञीस्यर्क्षु गायत्रमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन । तस्य सम्पत् । षडक्षराणि बहिष्पवमानादतिरिच्यन्ते तावदुष्णिक्ककुभ्यां लुप्यते तत् सम्पन्नम् ॥ ४ ॥

अथात उक्थान्तस्य भवत आष्ट्रादँष्ट्राच्छावाकसाम्नो मत्स्यपायि ते मह इति कालेयं परि प्रधन्वेति सफँ साकमश्वं हारिवर्णमाष्टादँष्ट्रमित्युकथानि । समानमितरं ज्योतिष्टोमेन । तस्य सम्पद्य् चतुर्दश चतुरक्षराण्याष्टादँष्ट्रादतिरिच्यन्ते तावत् सफकालेयाभ्यां लुप्यते तत् सम्पन्नम् ।

अथात उक्थान्तस्यैव भवत उद्वँशीयाच्छावाकसाम्नो नौधसस्य षट् ककुभ आ त्वा रथं यथोतय इति कालेयं स सुन्वे यो वसूनां परि प्र धन्वेति सफपौष्कले साकमश्वँ हारिवर्णमुद्वँशीयमित्युक्थानि । समानमितरं ज्योतिष्टोमेन । तस्य

सम्पच् चतुर्दश च द्वादशाक्षराणि सप्त चाष्टाक्षराण्युद्धँ शो- याद्‌तिरिच्यन्ते तावत् पृष्ठानां ब्रह्मसामाच्छावाकसामभ्यामु- ष्णिक्ककुब्भ्यां च लुप्यते तत् सम्पन्नम् ।

ब्रह्मवर्चसकामस्य स्वादिष्ठया मदिष्ठयेति गायत्रँ सँहितँ सत्रासाहीयं त एकर्चा ऐडं कौत्सं तिसृषु । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यां क्रौञ्चमेकस्यामयं पूषेति यद्‌ द्वितीयमौद्‌लमेकस्यामान्धीगवं तिसृषु । साकमश्वमेवा ह्यसि वीरयुरिति सौभरम् । इन्द्रं विश्वा अवीवृधन्निति नार्मेधं दशास्तूयमाना गायत्र्यःसप्तति स्तूयमानाः। समानमितरं ज्योति- ष्टोमेन । तस्य सम्पद् । एकविंशतिश्चतुरक्षराण्युक्थानां ब्रह्म- साम्नो लुप्यन्ते तावत् कौत्सक्रौञ्चाभ्यां च नार्मेधाच्चातिरि- च्यते तत् संपन्नम् ॥ ५ ॥

पशुकामस्य मत्स्यपायि ते मह इति कालेयम् । परि प्र धन्वेति सफँ साकमश्वं तं ते मदं गृणीमसीति सौभरम् । इन्द्रं विश्वा अवीवृधन्निति नार्मेधं नवास्तूयमाना उष्णिहस्त्रि- षष्टि स्तूयमानाः । समानमितरं ज्योतिष्टोमेन । तस्य सम्पद्‌ यथाष्टादँष्ट्राच्छावाक साम्नः ।

पुरुषकामस्य मत्स्यपायि ते मह इति कालेयम् । परि प्र धन्वेति सफँ साकमश्वं सौभरम् । इन्द्रं विश्वा अवीवृध- न्निति नार्मेधं नवास्तूयमानाः ककुभस्त्रिषष्टि स्तूयमानाः । समानमितरं ज्योतिष्टोमेन। तस्य सम्पद्‌ यथा पूर्वस्यान्नाद्यका- मस्येन्द्रा याहि धियेषित इति मध्यमां तृचस्य प्रभृतिं कृत्वा तासु कालेयम् । आ यः पुरं नार्मिणीमदीदेदिति साकमश्वं तं ते मदं गृणीमसीति सौभरम् । इन्द्रं विश्वा अवीवृधन्निति

नार्मेधम् । नवास्तूयमाना विराजस्त्रिषष्टि स्तूयमानाः । समानमितरं ज्योतिष्टोमेन । तस्य सम्पत् । पञ्चदशाक्षराणि द्वादश चैकादशाक्षराण्युक्थेभ्योऽतिरिच्यन्ते तावत् कालेयाल्लुप्यते तत् सम्पन्नम् ।

ज्यैष्ठ्यकामस्य गायन्ति त्वा गायत्रिण इति कालेयम् । स सुन्वे यो वसूनामिति सफम् । अग्ने तमद्याश्वं न स्तोमैरिति साकमश्वं तं ते मदं गृणीमसीति सौभरम् । इन्द्रं विश्वा अवीवृधन्निति नार्मेधम् । अष्टावस्तूयमाना अनुष्टुभः षट्पञ्चाशत् स्तूयमानाः । समानमितरं ज्योतिष्टोमेन । तस्य सम्पत् । षट् चतुरक्षराणि द्वादश च पञ्चाक्षराण्युक्थेभ्योऽतिरिच्यन्ते तावत् सफकालेयाभ्यां लुप्यते तत् संपन्नं तत् संपन्नम् ॥८॥

प्रतिष्ठाकामस्य क्लृप्तं रथंतरँ संधिषाम ।

स्वर्गकामस्य बृहत् संधिषामैतेष्वेव प्रगाथेषु ।

वारवन्तीयं वा वामदेव्यं वा श्रुध्यं वैतेषामेकं पशुकामाय संधिं कुर्यादेतेष्वेव प्रगाथेष्वैडं चेत् संधिषाम स्यात् कौत्सस्य लोक उद्वँशीयमा त्वा विशन्त्विन्दव इत्येतासु ।

सत्रात् साम्युत्तिष्ठतः क्लृप्तो विश्वजिदतिरात्रः सर्ववेदसं दक्षिणा अभिविवासाच्छंकमानाः पञ्चदशभिर्होत्रे स्तुयुः पञ्चभिःपञ्चभिरितरेभ्योऽग्ने विवस्वदुषस इति संधिना स्तुयुस्त्रिकेण स्तोमेन । तेऽनिकामात् सोममतिरिच्य त्रिकद्रुकेषु महिषो यवाशिरमिति बृहताष्टाचत्वरिँशेन स्तुवीरन्नुपोत्तमयो र्द्वयोः प्रचेतयेत्युपसर्गावुद्धरति । समानमितरं ज्योतिष्टोमेन । तस्य सम्पन् नवतिरनुष्टुभो रात्रेर्लुप्यन्ते द्वे च बृहत्यौ चतस्रश्च ककुभस् संधेस्तावदेतव् स्तोत्रं तत् सम्पन्नम् ।

यद्यर्वाक् स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिर्वातिष्टुयुर्भूयोऽक्षराभिर्वा त्रीडं वाग्निष्टोमसाम कुर्यः । तस्य कल्पः पुरोजिती वो अन्धस इति श्यावाश्वमान्धीगवमौदलं त एकर्चा यज्ञायज्ञीयं तिसृषु यज्ञायज्ञीयस्यर्क्षु महावैश्वमित्र मग्निष्टोमसाम। समानमितरं ज्योतिष्टोमेन ।

यद्यतिष्टुयुर्यावतीभिरतिष्टुयु स्तावतीभिर्वा न स्तुयुः कनीयोऽक्षराभिर्वा स्वारं वाग्निष्टोमसाम कुर्युः । तस्य कल्पः । कावस्यर्क्षु यज्ञायज्ञीयमन्त्यं यज्ञायज्ञीस्यर्क्षु दैर्घश्रवसमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेनोर्ध्वमग्निष्टोमसाम्नोर्वाग् वा स्तुवन्तः परो वा स्तोत्रीयासमं वा कुर्युरक्षरसमं वा ॥ ७॥

सोमे सँसुते पवस्वेन्दो वृषा सुतो दविद्युततया रुचा पवमानस्य ते कव इति तृचक्लृप्तं बहिष्पवमानं पवस्वेन्दो वृषा सुत उपास्मै गायता नरः पवस्व वाचो अग्रिय इति संभार्यस्तोत्रीय इति वाग्न आ याहि वीतय इति रथंतरं त्रीणि बार्हतान्यग्निं दूतं वृणीमह इत्युभयान्याज्यानीति वा वृषा पवस्व धारयेति गायत्रं चामहीयवं च । पुनानः सोम धारयेति रौरवमेकस्यां यौधाजयमेकस्याँ स्वारं तौरश्रवसमेकस्याँ रथन्तरं तिसृषु । वृषा शोण इति पार्थमन्त्यं बृहच्च वामदेव्यं च श्यैतं च कालेयं चाचिक्रदद् वृषा हरिरिति गायत्रसँहिते पवस्वेन्द्रमच्छेति सफश्रुध्ये पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यां निधनवत् तौरश्रवसमेकस्यामौदलमेकस्या मान्धीगवं तिसृषु कावमन्त्यं यज्ञायज्ञीयमग्निष्टोमसाम । ककुभावुत्तरे रथन्तरस्य करोति ब्रह्मायतनीया सप्तदशस्य विष्टुतिर्होतुः पृष्ठस्य छन्दोदेवत्या तृतीयातृतीया प्रवृतहोमयोर्यथासवनं कयाशुभीये मरुत्वतीयस्य निविदो दध्यात् सजनीये

निष्केवल्यस्य विहव्ये वैश्वदेवस्यापि चैतान्येव सूक्तानि पुरस्तान् निविद्धानानाँ शस्त्वाथ यथायतनमेव निविदो दध्यात् । तस्य सम्पत् । यथा ज्योगामयाविनो रथन्तरे ।

सोमेऽपहृते श्रायन्तीयं ब्रह्मसाम वयमुत्वामपूर्व्येति कालेयं पुरोजिती वो अन्धस इति श्यावाश्वमान्धीगवमौदलं त एकर्चा यज्ञायज्ञीयं तिसृषु यज्ञायज्ञीस्यर्क्षु वारवन्तीयमग्निष्टोमसाम पञ्च दक्षिणाः । समानमितरं ज्योतिष्टोमेन । तस्य सम्पद् । यथा यज्ञविभ्रष्टे । कलशे दीर्णे संमिते द्व सवने पूर्वेण स सुन्वे यो वसूनामुप शिक्षापतस्थुष इति सफपौष्कले त्वं द्यां च महिव्रतेत्यावर्त्य तृचँ श्यावाश्वमेकस्यामान्धीगवमेकस्यां वषट्कारणिधन मेकस्यां पुरोजिती वो अन्धस इति यज्ञायज्ञीयं तिसृषु अनुष्टुप् प्रथमा गायत्र्यावुत्तरे यज्ञायज्ञीयस्यर्क्षु वारवन्तीयमग्निष्टोम साम।सामनमितरं ज्योतिष्टोमेन। तस्य सम्पद्। विँशतिरक्षराणि वषट्कारणिधनादतिरिच्यन्ते तावदुष्णिक्ककुब्भ्यां च यज्ञायज्ञीयाच्च लुप्यते तत् संपन्नम् ।

अथातो वषट्कारणिधनब्रह्मसामा श्रायन्तीयानुष्टुप्को विधुं दद्राणँ समने बहूना मिति वषट्कारणिधनं ब्रह्मसामैषा ब्रह्मा य ऋत्विय इति कालेयम् । परि प्र धन्वेति सफं त्वं द्यां च महीव्रतेत्यावर्त्य तृचँ श्यावाश्वमेकस्यामान्धीगवमेकस्यां श्रायन्तीयमेकस्याम् । पुरोजिती वो अन्धस इति यज्ञायज्ञीयं तिसृषु सर्वास्वनष्टुप्सु यज्ञायज्ञीयस्यर्क्षु वारवन्तीयमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन।तस्य सम्पत् । सप्तदशविँशत्यक्षराणि वषट्कारणिधनादतिरिच्यन्ते तावत् कालेयाल्लुप्यते तत् संपन्नम् । अष्टावक्षराणि श्रायन्तीयादतिरिच्यन्ते तावत् सफाल्लुप्यते तत् संपन्नम् ॥ ६ ॥

प्रातःसवनात् सोमेऽतिरिक्ते ऽस्ति सोमो अयं सुत इति मरुत्वतीषु गायत्रेण स्तुयुः पञ्चमेनाज्येन त्रिवृत्पञ्चदशे पृष्ठानां ब्रह्मसामाच्छावाकसामनी स्याताम् ।समानमितरं ज्योतिष्टोमेन। तस्य सम्पत् । पञ्चदश गायत्र्यः प्रातःसवनादतिरिच्यन्ते तावत् पृष्ठानां ब्रह्मसामाच्छावाकसामभ्यां लुप्यते तत् संपन्नम्।

माध्यंदिनात् सवनादतिरिक्ते बण् महाँ असि सूर्येत्यादित्यवतीषु गौरीवितेन स्तुयुः पञ्चमेन पृष्ठेन त्रिवृत् तृतीयसवनं कुर्युस्तस्य कल्पः परि प्र धन्वेति सफं पर्यूष्वितिश्यावाश्वं पवस्व सोम महान्त्समुद्र इत्यान्धीगवं समानमितरं ज्योतिष्टोमेन । तस्य सम्पत् । सप्तदश बृहत्यो माध्यंदिनात् सवनादतिरिच्यन्ते तावत् तृतीयसवनाल्लुप्यते तत् संपन्नम् ।

तृतीयसवनादतिरिक्ते विष्णोः शिपिविष्टवतीषु गौरीवितेन स्तुयु र्द्वितीयेनाग्निष्टोमसाम्नैतदन्यत् कुर्युरुक्थान्यन्यत् प्रणयेयुरुक्थेभ्योऽतिरिक्ते रात्रिः कार्या रात्रेरतिरिक्ते विष्णोः शिपिविष्टवतीषु बृहता स्तुयुस्त्रिवृता स्तोमेनोपरिष्टात् संधेः ॥ १० ॥

यदि दीक्षितानां प्रमीयेत दग्ध्वास्थीन्युपनह्य यो नेदिष्ठी स्यात् तं दीक्षयित्वा सह यजेरन्नेतदन्यत् कुर्युरभिषुत्यान्यत् सोमं हुतयोरुपाँश्वन्तर्यामयोरगृहीतेष्वितरेषु ग्रहेषु पूर्वया द्वारोपनिष्क्रम्योत्तरेण मार्जालीयं दक्षिणामुखा आसीना वामेन स्तुवीरन्त्सार्पराज्ञीष्वग्निमीडे पुरोहितमिति यस्य योनि स्त्रिकेण स्तोमेन न स्तोमं युनक्ति न यजमानं वाचयति ता ऋचोऽनुब्रुवन्तस्त्रिः प्रसव्यं मार्जालीयं परीयुः सव्यानूरून् आघ्नानाः पुनस्त्रिः प्रदक्षिणं प्रतिपरीत्यासंस्पृशन्तोऽन-

पेक्षमाणाः प्रत्यावृज्याप उपस्पृश्यैन्द्रवायवाग्रान् ग्रहान् गृह्णी-रन्नग्न आयूँषि पवस इति तस्याह्नः प्रतिपत् स्यात् । समानमितरं तेन । संवत्सरे ऽस्थीनि याजयन्ते* ऽसंमितस्त्रोत्रो वा स्यात् त्रिवृत् पवमानो वा सप्तदशावर्तिः† । तस्य त्रिवृत् पवमानस्यैष कल्प उच्चा ते जातमन्धस इति गायत्रमेकस्यामहीयव-मेकस्यामाभीकमेकस्यां पुनानः सोम धारयेति रौरवमेकस्यां यौधाजयमेकस्यां कालेयमेकस्यां श्रायन्तीयं ब्रह्मसाम वैखान-समच्छावाकसाम । विपरिहरत्यै‡ न्द्रवायवमैत्रावरुणौ । समानमितरं ज्योतिष्टोमेन । तस्य संपद् । अष्टौ गायत्र्यः प्रातः-सवनादतिरिच्यन्ते सप्तदशाष्टाक्षराणि श्रायन्तीयात् सप्तदश द्वादशाक्षराणि वैखानसात् तावदुत्तराभ्यां च पवमानाभ्या-मग्निष्टोमसाम्नश्च लुप्यते तत् संपन्नम् ।

आरण्यपिशीर्णे पुनानः सोम धारयेति रौरवमेकस्यां द्योता-नमेकस्यां वृत्रस्य त्वा श्वसथादीषमाणा इत्येतयोः पूर्वं दैर्घश्र-वसमेकस्यामुद्वद् वा प्राजापत्यं यौधाजयं तिसृषु । समानमितरं ज्योतिष्टोमेनानु ब्राह्मणं क्लृप्ताः कर्मकल्पाश्चाहुतिकल्पाश्चाहुति कल्पाश्च ॥ ११ ॥

इति क्षुद्रसूत्रे प्रथमः प्रपाठकः ।

---

* याजयन्तो ।

† वृत्तिः ।

‡ हरन्त्यै ।

त्रयो वर्णकल्पा ब्राह्मणस्य राज्ञो वैश्यस्य च । ब्राह्मणस्य यजमानस्य कृतो ज्योतिष्टोमो राज्ञो यजमानस्याग्नियवती प्रतिपद् बार्हतान्याज्यानि बृहत्पृष्ठँ श्यैतं ब्रह्मसाम श्रुध्यमुष्णिहि समानमितरं ज्योतिष्टोमेन ।

वैश्यस्य यजमानस्य वैश्यस्तोमस्य प्रतिपच्चाज्यानि च पृष्ठं च ब्रह्मसाम च । समानमितरं ज्योतिष्टोमेन ।

अथात उभयसामानस्तेषां प्रथमो बृहत्पृष्ठो रथन्तराग्निष्टोमसामापि चाभिजित्प्रतिरूप इत्याचक्षते । तस्य कल्पो ऽग्नियवती प्रतिपद् बार्हतान्याज्यानि बृहत्पृष्ठं श्यैतं ब्रह्मसाम श्रुध्यमुष्णिहि । पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यामान्धीगवमेकस्यां मौद्लमेकस्यां नौधसं वा यज्ञायज्ञीयं तिसृषु यज्ञायज्ञीयस्यर्क्षु रथंतरमग्निष्टोमसाम । समानमितरं ज्योतिष्टोमेन ।

अथातो रथंतरपृष्ठो बृहदाग्निष्टोमसामापि च विश्वजित्प्रतिरूप इत्याचक्षते । तस्य कल्पः पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यामान्धीगवमेकस्यामौद्लमेकस्याँ श्यैतं वा यज्ञायज्ञीयं तिसृषु यज्ञयज्ञीयस्यर्क्षु बृहदग्निष्टोमसाम समानमितरं ज्योतिष्टोमेन ॥ १ ॥

अथातो रथन्तरपृष्ठा बृहदनुष्टुप्कास्त्रयो ऽपि चर्षभप्रतिरूपा इत्याचक्षते । तेषां प्रथमस्य कल्पः पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यामान्धीगवमेकस्यामौद्लमेकस्यां बृहत् तिसृषु समानमितरं ज्योतिष्टोमेने ति प्रथमः ।

अथ द्वितीयः । पुरोजिती वो अन्धस इति श्यावाश्वमे-

कस्यामान्धीगवमेकस्यां बृहदेकस्यां पुनश्चाभिनिर्वृत्य * बृहता तृचं समापयति समानमितरं ज्योतिष्टोमेनेति द्वितीयः।

अथ तृतीयः। पुरोजिती वो अन्धस इति श्यावाश्वमेकस्यां तस्यामेवान्धीगवं तस्यां चैव बृहदुत्तरे च द्वे तिस्रः करोति द्विर्द्विः पदमभ्यस्यंस्तासु बृहत् । समानमितरं ज्योतिष्टोमेन ॥ २ ॥

अथातो बृहत्पृष्ठा रथन्तरमध्यंदिना स्त्रयोऽपि च साहस्रप्रतिरूपा इत्याचक्षते। तेषां प्रथमस्य कल्पः साहस्र माज्यबहिष्पवमानं यथा प्रथमस्य पुनानः सोम धारयेति रौरवं यौधाजयं दैर्घश्रवसमुद्वद् वा प्राजापत्यं त एकर्चा रथन्तरं तिसृषु सर्वासु बृहतीषु बृहत्पृष्ठँ श्यैतं ब्रह्मसाम श्रुध्यमुष्णिहि। समानमितरं ज्योतिष्टोमेनेति प्रथमः।

अथ द्वितीयः। ककुभावुत्तरे रथन्तरस्य करोति ब्रह्मायतनीयः सप्तदशस्य विष्टुति र्होतुःपृष्ठस्य। समानमितरं पूर्वेण। तस्य संपद् यथा संसुतसोम इति द्वितीयः।

अथ तृतीयः। उच्चा ते जातमन्धस इति गायत्रं तिसृष्वामहीयवमेकस्यामैडं कौत्समेकस्यामाभीकमेकस्यां सत्रासाहीयं वा पुनानः सोम धारयेति रौरवमेकस्यां यौधाजयमेकस्यां वरुणसामैकस्यां रथन्तरं तिसृषु। निर्मध्यः † सप्तदशस्य विष्टुतिः पृष्ठानाम्। समानमितरं ज्योतिष्टोमेन। तस्य सम्पत्

---

* भिनिर्वृत्य,—भिर्वृत्य।

† नित्या।

षोडशाक्षराणि रथंतराल्लुप्यन्ते तावत् कौत्सवरुणसामभ्यामतिरिच्यते तत् सम्पन्नम् ॥ ३ ॥

अथातः पुरोहितकुलीनस्य * पुरोधामनश्नवानस्य तस्मिन्नुभे प्रतिपदावुभयान्याज्यान्युभे पृष्ठे उभे ब्रह्मसामनी करोति । तस्य कल्पः उपास्मै गायता नरः पवस्व वाचो अग्रियः पवमानस्य ते कव इति तृचक्लृप्तं बहिष्पवमानमुपास्मै गायता नरः पवस्व वाचो अग्रिय उपोषुजातमप्तुरमिति संभार्यस्तोत्रीय इति वाग्न आयाहि वीतय इति राथन्तरं त्रीणि बार्हतान्यग्निं दूतं वृणीमह इत्युभयान्याज्यानीति वा पुनानः सोम धारयेति रौरवमेकस्यां नौधसमेकस्यां दैर्घश्रवसमेकस्यामुद्वद्वा प्राजापत्यं यौधाजयं तिसृषु रथन्तरं पृष्ठं बृहद्ब्रह्मसाम पुरोजिती वो अन्धस इत्याकूपारं तिसृषु परि त्यं हर्यतँ हरिमिति यस्य योनिः श्यैतमेकस्यां श्यावाश्वमेकस्यामान्धीगवमेकस्याम् । समानमितरं ज्योतिष्टोमेन । तस्य सम्पद् द्वादशाष्टाक्षराण्याकूपारादतिरिच्यन्ते, तावत् पृष्ठानां ब्रह्मसाम्नो लुप्यते तत् सम्पन्नम् ॥ ४ ॥

अथैष एव सन् विपरीतस्तस्मिन्नुभे प्रतिपदावुभयान्याज्यान्युभे पृष्ठे उभे ब्रह्मसामनी करोति । तस्य कल्पः । पवस्व वाचो अग्रिय उपास्मै गायता नरः पवमानस्य ते कव इति तृचक्लृप्तं बहिष्पमानं पवस्व वाचो अग्रिय उपास्मै गायता नरः पवस्वेन्दो वृषा सुत इति संभार्यस्तोत्रीय इति वाग्निं दूतं

---

*पुरोहितकु० । पुरोहितः कु०

वृणीमह इति बार्हतं त्रीणि राथन्तराण्यग्न आ याहि वीतय इत्यु-
भयान्याज्यानीति वा पुनानः सोम धारयेति रौरवमेकस्यां
श्यैतमेकस्यां दैर्घश्रवसमेकस्यामुद्वद्वा प्राजापत्यं यौधाजयं
तिसृषु बृहत्पृष्ठं रथन्तरं ब्रह्मसाम पुरोजिती वो अन्धस इत्या-
कूपारं तिसृषु परित्यँ हर्यतँ हरिमिति यस्ययोनि नौधसमे कस्यां
श्यावाश्वमेकस्यामान्धीगवमेकस्याम्। समानमितरं ज्योतिष्टो-
मेन। तस्य सम्पद् यथा पूर्वस्यायातो यज्ञायज्ञीयानुरूपो बृहदग्नि-
ष्टोम सामा। तस्य कल्पो यज्ञायज्ञीयमनुरूपे गायत्रं स्तोत्रीय पर्या-
स्यो रुपाशिक्षापतस्थुष इति सफ यज्ञायज्ञीयस्यर्क्षु बृहदाग्निष्टोम-
साम। समानमितरं ज्योतिष्टोमेन। तस्य सम्पद् द्वे अक्षरे बहि-
ष्पवमानादतिरच्येते तावत् सफाल्लुप्यते तत् सम्पन्नम्।

अथातःषोडशसामा। तस्य रथंतरंबृहत् पृष्ठं नौधसश्यैतं
ब्रह्मसाम समानमितरं ज्योतिष्टोमेन।

अथैष एव सन् विपरीत स्तस्य बृहद्रथंतरं पृष्ठं श्यैत-
नौधसं ब्रह्मसाम। समानमितरं ज्योतिष्टोमेन॥ ५॥

अथातोऽष्टौ गर्भिणस्तेषां प्रथमस्य कल्पो रथंतरस्य
प्रथमोत्तमौ पर्यायौ बृहतो मध्यमः स एव स्तोत्रीय इति पृष्ठे
नौधसस्य प्रथमोत्तमौ पर्यायौ श्यैतस्य मध्यमः स एव स्तोत्रीय
इति ब्रह्मसाम। समानमितरं ज्योतिष्टोमेनेति पूर्वः।

अथोत्तरो बृहतः प्रथमोत्तमौ पर्यायौ रथंतरस्य मध्यमः
स एव स्तोत्रीय इति पृष्ठं श्यैतस्य प्रथमोत्तमौ पर्यायौ नौधसस्य
मध्यमः स एव स्तोत्रीय इति ब्रह्मसाम। समानमितरं ज्योतिष्टो-
मेनेति प्रगुणौ।

अथ व्यतिषक्तावेते एव पृष्ठे ब्रह्मसामनी एवान्योन्यस्य

स्थानं व्यतिहरेदथैत एव सन्तो जामिक्लृप्ता रथन्तरस्य प्रथमो पर्यायो वारवन्तीयस्य द्वितीयो रथन्तरस्यैव स्तोत्रीये बृहतस्तृतीय इति पृष्ठं नौधसस्य प्रथमः पार्यायो वाङ्निधनस्य क्रौञ्चस्य द्वितीयो नौधसस्यैव स्तोत्रीये श्यैतस्य तृतीय इति ब्रह्मसाम। समानमितरं ज्योतिष्टोमेनेति पूर्वः।

अथोत्तरो बृहतः प्रथमः पर्यायो वारवन्तीयस्य द्वितीयो बृहत एव स्तोत्रीय रथंतरस्य तृतीय इति पृष्ठं श्यैतस्य प्रथमः पर्यायो वाङ्निधनस्य क्रौञ्चस्य द्वितीयः श्यैतस्यैव स्तोत्रीये नौधसस्य तृतीये इति ब्रह्मसाम। समानमितरं ज्योतिष्टोमेनेति प्रगुणौ।

अथ व्यतिषक्तावेते एव पृष्ठे ब्रह्मसामनी एवान्योन्यस्य स्थानं व्यतिहरेद्।

अथानेनैव ज्योतिष्टोमेन यजमानो विद्यादुभयसाम्ना यज इति यत्र रथंतरं पृष्ठं नौधसेन तत्र बृहदुपाप्तं यत्रो बृहच् छ्यैतेन तत्र रथंतरं बृहद्रथंतरे वै परोक्षे श्यैतनौधसे इति हि भवतीति ॥ ६ ॥

अथातो दशरात्रप्रबर्हः प्रथमस्याह्नो बहिष्पवमानं प्रथमं चाज्यं द्वितीयस्य द्वितीयं तृतीयस्य तृतीयं चतुर्थस्य चतुर्थं पञ्चमस्याह्नो माध्यंदिनः पवमानः षष्ठस्यान्हो होतुः पृष्ठं सप्तमस्य द्वितीयमष्टमस्य तृतीयं नवमस्य चतुर्थं दशमस्याह्न आर्भवश्चाग्निष्टोमसाम च सर्वाणि स्वस्तोमानि।

अथातो द्वादशाहप्रबर्होऽतिरात्रस्य बहिष्पवमानं प्रथमस्याह्नः प्रथममाज्यं द्वितीयस्य द्वितीयं तृतीयस्य तृतीयं चतुर्थस्य चतुर्थं पञ्चमस्याह्नो माध्यंदिनः पवमानः षष्ठस्यान्हो होतुः पृष्ठं

सप्तमस्य द्वितीयमष्टमस्य तृतीयं नवमस्य चतुर्थं दशमस्याह्न आर्भवोऽतिरात्रस्यैवाग्निष्टोमसामसर्वाण्येवस्वस्तोमानि ॥७॥

अथातः सवनप्रवर्हाश्चत्वारः। प्रथमस्याह्नः प्रातःसवनं चतुर्थस्य माध्यंदिनँ सवनँ सप्तमस्य तृतीयसवनं द्वितीयस्य प्रातःसवनं पञ्चमस्य माध्यंदिनँ सवनमष्टमस्य तृतीयसवनम्। तृतीयस्य प्रातःसवनं षष्ठस्य माध्यंदिनँ सवनं नवमस्य तृतीयसवनम्। अतिरात्रस्य प्रातःसवनं दशमस्य माध्यंदिनँ सवनमतिरात्रस्यैव तृतीयसवनँ सर्वाणि स्वस्तोमानि।

अथातः सवनप्रवर्हा एव चत्वारः। प्रथमस्याह्नः प्रातःसवनं द्वितीयस्य माध्यंदिनँ सवनं तृतीयस्य तृतीयसवनम्। चतुर्थस्य प्रातःसवनं पञ्चमस्यमाध्यंदिनँ षष्ठस्य तृतीयसवनम्। सप्तमस्य प्रातःसवन मष्टमस्य माध्यंदिनँ सवनं नवमस्य तृतीयसवनम्। अतिरात्रस्य प्रातःसवनं दशमस्य माध्यंदिनं सवनमतिरात्रस्यैव तृतीयसवनं सर्वाण्येव स्वस्तोमानि ॥ ८ ॥

अथात आवापवानेकाहोऽपि चर्त्विग्गपोहत इत्याचक्षते। अन्तरेणानुरूपपर्यासौ गायत्राणि पावमानानि तृचसूक्तान्यावपेद् यावन्ति कामयेतान्तरेण गायत्रा महीयवे गायत्रीसामान्यावपेद् यावन्तिकामयेतान्तरेण रौरवयौधाजयेबार्हतानि सामान्यावपेद् यावन्ति कामयेतान्तरेण गायत्रसँहिते गायत्रीसामान्यावपेद् यावन्ति कामयेतान्तरेण श्यावाश्वान्धीगवे आनुष्टुभानि सामान्यावपेद् यावन्ति कामयेत यथायथा चाजामि कल्पायिष्यन् मन्येत तथातथा कल्पं कुर्वीत विष्टुतिनेत्राण्यावर्तीनि भवन्तीति।

अथातः श्रीस्तोमाश्चत्वारोऽपि च वाचस्तोमा इत्याचक्षते। एकया प्रथमस्य बहिष्पवमानं दशभिर्द्वितीयस्य शतेन

तृतीयस्य सहस्रेण चतुर्थस्याथात ऊर्ध्वं दशाक्रमाद् दशभिर्होतु-राज्यं शतेन मैत्रावरुणस्य सहस्रेण ब्राह्मणाच्छंसिनोऽयुतेनाच्छावाकस्य प्रयुतं माध्यंदिनः पवमानो नियुतं होतुः पृष्ठमर्बुदं मैत्रावरुणस्य न्यर्बुदं ब्राह्मणाच्छंसिनो निखर्वकमच्छावाकस्य बद्वमार्भवोऽक्षितमग्निष्टोमसामाक्षितमार्भवो व्योमाग्निष्टोमसाम व्योमार्भवोऽन्तोऽग्निष्टोमसामान्त आर्भवः सर्वमग्निष्टोमसाम ।

अथातो ब्रह्मसामपृष्ठावेकाहावपि च तनूपृष्ठावित्याचक्षते । ब्रह्मसामनी पृष्ठे पृष्ठे ब्रह्मसामनी सस्तोत्रीये सधर्मणी । तौ ब्रह्मसामपृष्ठावेकाहावेकाहौ ॥९॥

अथातः षडहस्य पृष्ठतो विचाराः । बृहद्रथंतरपृष्ठः षडहः समूढः । तस्य कल्पो यथा पृष्ठ्यस्तोमस्य यद्याहीनिको ऽथ यदि सात्त्रिकः स एव सन् गौरीवितस्वरः ।

अथातो नानापृष्ठः षडहः समूढो वा व्यूढो वा समूढस्त्वेव । तस्य कल्पो यथर्तूनां षडहस्य यद्याहीनिको ऽथ यदि सात्त्रिकः स एव सन् गौरीवितस्वरः ।

अथातः परोक्षपृष्ठः षडहः । तस्य कल्पः प्रथमस्याह्नो ऽभि त्वा शूर नोनुम इति कण्वरथंतरं पृष्ठं द्वितीयस्याह्नस्त्वामिद्धि हवामह इति बृहन्निधनं वार्कजंभं कण्ववृहद् वा त्वा सहस्रमाशतमित्येतेषां द्वितीयं प्रज्ञातपृष्ठ उत्तरश्चतुरहः ।

अथातः सर्वपरोक्षपृष्ठः षडहः । तस्य कल्प एत एव प्रथमयोरह्नोःपृष्ठे तृतीयस्याह्नो यद्द्याव इन्द्र ते शतमिति ह्रस्वा बृहदोपशान्तरिक्षं वान्तरिक्षस्य लोकेऽञ्जो वैरूपमनुकल्पयेन् महावैष्टंभं वा महावैष्टंभस्य लोकेऽभिनिधनं काण्वं चतुर्थस्याह्नः

पिबा सोममिन्द्र मन्दतु त्वेत्यृषभो वैराजो दैर्घतमसं वा हा उ पिबेत्येतद् वसिष्ठस्य वा वैराजमग्नि नर इत्येतयोरुत्तरं पञ्चमस्याह्नस्तृकद्रुकेषु महिषो यवाशिरमिति नित्यवत्सा अतिषङ्गाणां वा प्रथममिन्द्रायाहिचित्रभानो यदिन्द्र चित्र म इह नेत्येतासु गायत्रीषु चानुष्टुप्सु च षष्ठस्यान्हो वारवन्तीयं पृष्ठं रेवतीनां लोके दार्ढच्युतं विपरिहरत्यौक्ष्णोरन्ध्रे ॥१०॥

अथात उभयतःपरोक्षपृष्ठः षडह ऋक्तश्चैव सामतश्च। तस्य कल्पः प्रथमस्याह्नो ऽभि त्वा पूर्वपीतय इति कण्वरथंतरं पृष्ठं द्वितीयस्याह्नस्त्वं ह्येहि चेरव इति बृहन्निधनं वार्कजंभं कण्वबृहद् वा त्वा सहस्रमाशतमित्येतेषां द्वितीयं तृतीयस्याह्नो यदिन्द्र यावतस्त्वमिति ह्रस्वा बृहदोपशान्तरिक्षं वान्तरिक्षस्य लोके ऽऊजो वैरूपमनुकल्पयेन्महावैष्टम्भं वा महावैष्टंभस्य लोके ऽभिनिधनं काण्वं चतुर्थस्याह्नः श्रुधी हवं विपिपानस्याद्रेरित्यृषभो वैराजो दैर्घतमसं वा हा उ पिबेत्येतद् वसिष्ठस्य वा वैराजमग्नि नर इत्येतयोरुत्तरं पञ्चमस्याह्नः प्रोष्वस्मै पुरोरथमिति नित्यवत्सा अतिषङ्गाणां वा प्रथममिन्द्रायाहि चित्रभानो यदिन्द्र चित्र म इह नेत्येतासु गायत्रीषु चानुष्टुप्सु च षष्ठस्याह्नो रेवाँ इद् रेवत स्तोतेति वारवन्तीयं पृष्ठं रेवतीनां लोके दार्ढच्युतं विपरिहरत्यौक्ष्णोरन्ध्रे ॥११॥

अथात उपाङ्क्यपृष्ठश्चान्वाहार्यपृष्ठश्च षडहौ । तयोः कल्पः प्रत्यक्षाणि पृष्ठानि प्रत्यक्षेषु पृष्ठस्तोत्रीयेषु परोक्षाणि मध्यंदिनेषु बृहतीषु पञ्चानामह्नां गायत्रीषु षष्ठस्य स उपाङ्क्यपृष्ठः षडहस्तान्येवोपरिष्टादार्भवेष्वनुष्टुप्सु पञ्चानामह्नां गायत्रीषु षष्ठस्य सो ऽन्वाहार्यपृष्ठः षडहः ॥

अथात उपाङ्क्यपृष्ठश्चैवान्वाहार्यपृष्ठश्च षडहौ । तयोः कल्पो विपर्यासं बृहद्रथंतरे पृष्ठे उत्तरस्य चतुरहस्य परोक्षाणि मध्यंदिनेषु बृहतीषु त्रयाणामह्नां गायत्रीषु षष्ठस्य स उपाङ्क्यपृष्ठः षडहः । तान्येवोपरिष्टादार्भवेष्वनुष्टुप्सु त्रयाणामह्नां गायत्रीषु षष्ठस्य सोऽन्वाहार्यपृष्ठः षडहः ।

अथातः पुरस्ताज्ज्योतिश्चोपरिष्टाज्ज्योतिश्च षडहौ । तयोः कल्पः परोक्षाणि पृष्ठानि प्रत्यक्षेषु पृष्ठस्तोत्रीयेषु प्रत्यक्षाणि मध्यंदिनेषु बृहतीषु पञ्चानामह्नां गायत्रीषु षष्ठस्य स पुरस्ताज्ज्योतिः षडहः । तान्येवोपरिष्टादार्भवेष्वनुष्टुप्सु पञ्चानामह्नां गायत्रीषु षष्ठस्य स उपरिष्टाज्ज्योतिः षडहः । अथातो बृहद्रथंतरपुरस्ताज्ज्योतिश्च बृहद्रथंतरोपरिष्टाज्ज्योतिश्च षडहौ । तयोः कल्पः परोक्षाणि पृष्ठानि परोक्षेषु पृष्ठस्तोत्रीयेषु बृहद्रथंतरे मध्यंदिनेषु बृहतीषु विपर्यासँ स बृहद्रथंतरपुरस्ताज्ज्योतिः षडहः । त एवोपरिष्टादार्भवेष्वनुष्टुप्सु विपर्यासँ स बृहद्रथंतरोपरिष्टाज्ज्योतिः षडहः ॥१२॥

अथातः आपकर्यपृष्ठौ षडहौ परोक्षापकर्यपृष्ठश्च प्रत्यक्षापकर्यपृष्ठश्च । तयोः कल्पः प्रत्यक्षस्य प्रथमोत्तमौ पर्यायौ परोक्षस्य मध्यमः स परोक्षापकर्यपृष्ठः षडहः । परोक्षस्य प्रथमोत्तमौ पर्यायौ प्रत्यक्षस्य मध्यमः स प्रत्यक्षापकर्यपृष्ठः षडहः । अथातः प्राङ्क्यपृष्ठौ षडहौ परोक्षपराङ्क्यपृष्ठश्च प्रत्यक्षप्राङ्क्यपृष्ठश्च । तयोः कल्पः प्रत्यक्षस्य प्रथमः पर्यायः परोक्षस्योत्तरौ स परोक्षप्राङ्क्यपृष्ठः षडहः । परोक्षस्य प्रथमः पर्यायः प्रत्यक्षस्योत्तरौ स प्रत्यक्षप्राङ्क्यपृष्ठः षडहः । अथात उपाङ्क्यपृष्ठौ षडहौ । परोक्षोपाङ्क्यपृष्ठश्च प्रत्यक्षोपाङ्क्यपृष्ठश्च । तयोः

कल्पः प्रत्यक्षस्य पूर्वौ पर्यायौ परोक्षस्योत्तमः स परोक्षोपाङ्क्यपृष्ठः षडहः। परोक्षस्य पूर्वौ पर्यायौ प्रत्यक्षस्योत्तमः स प्रत्यक्षस्योपाङ्क्यपृष्ठः षडहः ॥ १३ ॥

अथातो बृहद्रथंतरपृष्ठः सन् षडहोऽनुगृहीतपृष्ठः। तस्य कल्पः तृतीयस्याह्नो वैरूपं मध्यंदिने बृहत्यामनुक्लृप्तं चतुर्थस्याह्नो वैराजमार्भवेऽनुष्टुभि पञ्चमस्याह्नः शाक्वरों मध्यंदिने बृहत्यामनुक्लृप्ताः षष्ठस्याह्नो रेवत्यार्भवे गायत्र्याम्। सोऽनुगृहीतपृष्ठः षडहः। अथातो बृहद्रथंतरपृष्ठ एव सन् षडहोऽनुगृहीतपरोक्षः। तस्य कल्पः प्रत्यक्षाणां स्थाने परोक्षाणि। सोऽनुगृहीतपरोक्षः षडहः। अथातो नानापृष्ठः सन् षडहोऽनुगृहीतबृहद्रथंतरः। तस्योक्तः कल्पः कर्माणि। अथातो नानापृष्ठ एव सन् षडहोऽनुगृहीतपरोक्षतरः। तस्य कल्पः प्रत्यक्षस्यो स्थाने परोक्षाणि सोऽनुगृहीतपरोक्षतरः षडहः। अथातो ब्रह्मसामपृष्ठः षडहोऽपि च तनूपृष्ठ इत्याचक्षते। ब्रह्मसामानि पृष्ठानि पृष्ठानि ब्रह्मसामानिसस्तोत्रीयाणि सधर्माणि। स ब्रह्मसामपृष्ठःषडहः। अथात एकविंशत्यहे पृष्ठ्यमन्तरुपयन्तस्तृतीयषष्ठे अहनी सस्तोमे सतन्त्रे सपृष्ठे ससँस्थे व्यतिहरेयुस्तोमौ वैनयोर्व्यतिहरेयुः सप्तदशं वोद्धृत्य प्राच स्तोमान्त् समुह्य षष्ठतन्त्रे सप्तदशं कल्पयेयुः प्रसिद्धं त्वेवोपेयुः। अथ य एव संवत्सरे षडहस्य पृष्ठतो विचारास्ते विश्वजितः ॥ १४ ॥

अथातो द्वादशाहाश्चत्वारो भरतद्वादशाहाः। तेषां प्रथमस्य कल्पो ऽयमेव ज्योतिष्टोमो ऽविक्लृप्तो द्वादशकृत्व इति प्रथमः। अथद्वितीय एतस्यैव सतोऽतिरात्रावभितो दशाग्निष्टोमा मध्य इति द्वितीयः।

अथ तृतीयः । एतस्यैव सतोऽतिरात्रावभितो बृहद्रथंतरपृष्ठानि दशाहानि मध्यतः । तेषां प्रथमस्य कल्पः पुरोजिती वो अन्धस इति गौरीवितमेकस्यां पदनिधनँ शुद्धाशुद्धीयमेकस्याँ श्यावाश्वमेकस्यामान्धीगवं तिसृषु समानमितरं ज्योतिष्टोमेनेति राथंतरम् । अथ बार्हतमग्नियवती प्रतिपद्बार्हतान्याज्यानि बृहत्पृष्ठँ श्यैतं ब्रह्मसाम श्रुध्यमुष्णिहि पुरोजिती वो अन्धस इति गौरीवितमेकस्यां मधुश्चुन्निधनमेकस्याँ श्यावाश्वमेकस्यामान्धीगवं तिसृषु । समानमितरं ज्योतिष्टोमेनै ताभ्यामेव विपर्यासं दशाहानि मध्यत इति तृतीयः। अथ चतुर्थः। एतस्यैव सतःषोडशिमन्तावतिरात्रावभितो ऽग्निष्टोमावन्तराष्टौ मध्य उक्थ्याः षोडशिमच्चतुर्थमहरुभयसाम सप्तमं बृहत्पृष्ठं कण्वरथन्तरमध्यन्दिनम् । तस्यकल्पो बार्हतस्याह्नः शाकमाश्वँ सौभरमाष्टा दँष्ट्र मित्युक्थानि प्रमँहिष्ठीयँ हारिवर्ण तैरश्च्यमिति राथंतरस्य । चतुर्थस्याह्नो नानदँ स्वरमाष्टादँष्ट्रस्य लोके नार्मेधं प्रत्यस्मै पिपीषत इति गौरीवितँ षोडशिसाम । सप्तमस्याह्नः पुनानः सोम धारयेतिरौरवमेकस्यां कण्वरथंतरमेकस्यां मैधातिथमेकस्यां यौधाजयं तिसृषु । यद्यु वै कण्वरथंतरं तृचस्थं चिकीर्षेत् । कण्वरथंतरयौधाजये अन्योऽन्यस्य स्थानं व्यतिहरेत् । उद्वँशीयान्तानि षष्ठनवमयोरह्नोरुक्थानि । बार्हतँ षष्ठमहर्बार्हतँ सप्तमँ राथन्तरमष्टमं बार्हतं नवमँ राथन्तरं दशमं तस्मिन्त्सार्पराज्ञम् ॥ १५ ॥

अथातस्त्रयास्त्रिकद्रुकद्वादशाहाः । तेषां प्रथमस्य कल्पो ऽतिरात्रावभितः पञ्चकृत्वो गो-आयुषी मध्यतो विपर्यासं ते सर्व ऐकाहिका गौरीवितस्वराः । अतिरात्रावभितश्चतुर्गो-

आयुषी मध्यतो विपर्यासं ज्योतिष्टोमः प्रथमदशमे अहनी ते सर्वे ऐकाहिका गौरीवितस्वराः । अतिरात्रावभितस्त्रिस्त्रिकद्रु-कानूर्ध्वानुपयन्ति ज्योतिष्टोम एव दशममहस्ते सर्वे एवैकाहिका गौरीवितस्वराः । अथातः सूकरजातयोऽपिच निकायिन इत्याचक्षते । अतिरात्रावभितो दशकृत्वो ज्योतिष्टोमो मध्यतो ऽविक्लृप्तः स ज्योतिर्द्वादशाहोऽतिरात्रावभितो दशकृत्वो गोष्टोमो मध्यतोऽविक्लृप्तः स गोर्द्वादशाहोऽतिरात्रावभीतो दशकृत्व आयुष्टोमो मध्यतोऽविक्लृप्तः स आयुर्द्वादशाह एवमेवाभिजिद्द्वादशाह एवं विश्वजिद्द्वादशाह एवँ सर्व-जिद्द्वादशाह एतेन प्रदेशेन यावन्तोऽहीनैकाहास्तावन्तो द्वादशाहा इति प्रदिशन्त्यभ्यासमहीनैरविक्लृप्तैर्दशाहानि पूरयेद् यत्राभ्यासो नोपपद्येत ज्योतिष्टोमेने तत्र पूरयेदिति पूरयेदिति ॥ १६ ॥

इति क्षुद्रसूत्रे द्वितीयः प्रपाठकः ॥

अथातो ऽस्यैव सतो विचारान् वेदयिष्यामहे द्वादशा-हस्य बृहद्रथंतरपृष्ठो द्वादशाहः स्यादित्याहुः कस्य हेतोरिति भूमास्यबृहद्रथंतरपृष्ठान्यहानि प्रथमश्च त्र्यह उत्तरश्च चतुरहो भूम्नो वशं नेष्याम इत्येतस्य हेतोरिति । अथापरँ रथंतरं परोक्षं वैरूपं बृहत् परोक्षं वैराजं रथन्तरं परोक्षँ शक्वर्यो बृहत् परोक्षँ रेवत्यो ययोरियं परोक्षकृतिर्हन्त ते एव साक्षात् करवाणीति । स खलु बृहद् रथंतरपृष्ठः सन्त्समूढः कथं हि बृहद्रथंतरपृष्ठः सन्त्समूढः स्यादित्युक्तः पृष्ठ्यस्य समूढ उक्तश्छन्दोमानां यथा छन्दोमवति दशरात्रे तथा ते सन्तो गौरीवितस्वरा नवमादह्नोऽर्कः प्रच्यवते तमनुष्टुभ्य-

नुगृह्णाति तस्योक्तः कल्पः । समापद्यन्ते दशमे ऽहनि सामानि यथा छन्दोमदशाहे तथा दशममहरित्येष बृहद्रथन्तरपृष्ठो द्वादशाहस्तेनैतेन प्रतिष्ठाकामो यजेत प्रतिष्ठा वै बृहद्रथन्तरे साम्नामिति हि भवतीति । अथातो नानापृष्ठो द्वादशाहःस्यादित्याहुः सो ऽयमेव द्वादशाहोऽयमिममधीमहे ॥१॥

अथातो विराट्सम्पन्नो द्वादशाहः स्यादित्याहुः । कस्य हेतोरिति । विराडपचिता यज्ञक्रतां भवति विराजि हि सर्वे ऽस्या अयेषु सर्वाणि स्तोमछंदाँसि प्रतिष्ठितानि भवन्ति सोऽयं विराट्सम्पन्नो द्वादशाहःसंपरेतो विराजं संपद्यते । स यथा मेऽहरहश्च विराजँ सम्पत्स्यते संपरेतश्च तथा करवाणीति तस्याषोडशिकावतिरात्रावभितः स्यातां पंचदशे पृष्ठानां मैत्रावरुणसामनी स्यातामत्र तौ विराजँ सम्पद्येते चत्वारिँशच्च चत्वारि च शतान्यन्यतरस्यातिरात्रस्य स्तोत्रीयस्तथान्यतरस्य द्वाचत्वारिंशच्च पुरा भवन्ति तत् प्रथमस्याह्नःपञ्चदशं तृतीयसवनँ स्यादत्र तद् विराजं संपद्यतेऽष्टशतं पुरा स्तोत्रीयास्ता अद्य विँशतिशतँ संपन्नाः । अथ पराण्यहानि सर्वाण्येव स्युः षोडशिमन्त्यासितं त्वाष्ट्रीसामाविकल्पं चतुर्थमहस्त्वाष्ट्रीसाम क्रौञ्चमेतानि स्युः षोडशिसामान्यानुष्टुभेषु तृचेष्वैन्द्रेषु हरिवत्सु सामान्येषु यदि सामान्या न विद्येरन्नप्यसामान्यासु स्युर्यद्यु हरिवत्यो न विद्येरन्नप्यहरिकास्वेव स्युस्तत्र सर्व एव पञ्चदशस्तोमाः स्युः षोडशिन एतद्धस्म खल्वस्य धानंजय्यो व्याचष्टे । अथह स्माह शाण्डिल्य इहैव खल्विमानि गौरीवितलोकँ संप्रत्यवेतानि स्युरित्यथ गौरीवितमेवाहरहःषोडशि साम स्यान्नित्यसम्पन्नाश्छन्दोमा विराजँ षष्टिश्च त्रीणि च शतानि सप्तमस्याह्न

स्तोत्रीयाः षष्टिश्चैव षट् च शतान्यष्टमस्य विंशतिश्च सप्तच शतानि नवमस्य त्रिशतस्तोत्रीयं दशममहः सम्पद्यते स ह नु सार्पराज्ञेन। तदु चेद् ब्रूयुरस्तोत्रं वा एतद् यत् सार्पराज्ञमनाख्याँ हि मनयतीत्यान्धीगवादुत्तरं पवस्व सोम मन्दयन्नित्येतासु द्विपदासु श्रेयः कल्पयेदत्रास्योभे भद्रश्रेयसी कृते भवतः षडहान्ते ह भद्रं दशरात्रान्ते श्रेय इति। एष विराट् सम्पन्नो द्वादशाहः। तन्नैतेनान्नाद्यकामो यजेतान्नं विराडिति हि भवतीति ॥२॥

अथातोऽनुरूपाग्निष्टोमसामा द्वादशाहः स्यादित्याहुः। कस्य हेतोरिति। पृष्ठाग्निष्टोमसामनी खलु कल्पस्य समाधित्सिततमे भवतो यथा ह्येव पृष्ठेन कल्प आख्यायत एव मप्यग्निष्टोमसाम्ना कल्प आख्यायते। ते चेत् समाधास्याम्यत्र मेऽयँ सर्वो दशरात्रः समाधिं गमिष्यतीति। तत् प्रथमस्यान्हो देवो वो द्रविणोदा इत्येष वासिष्ठः प्रगाथो वासिष्ठँ रथन्तरं तस्मिन्त्स्यात् कण्वरथन्तरमग्निष्टोमसाम। तत्सदृशं भवति रथन्तरेण वासिष्ठं नु भवति यथा रथन्तरं प्रागाथिकं यथा रथन्तरं ककुबुत्तरासु यथा रथन्तरं प्रण्यस्तगीति यथारथन्तरं बहु सदृशँ रथन्तरेण भवतीति। तद्रथन्तरं पृष्ठं कण्वरथन्तरमग्निष्टोमसामात्र ते समाधिमितः। यज्ञायज्ञीय मत्रान्त्यं स्यात् काव्यस्यर्क्षु कावमतः प्रच्यवेतेति ॥३॥

द्वितीयस्यान्हः कण्व बृहदाग्निष्टोम साम यज्ञायज्ञीयस्यर्क्षु त्वा सहस्र माशत मित्येतेषां द्वितीयम्। तद् बृहत् पृष्ठं कण्व बृहदग्निष्टोमसामात्रैव ते समाधिमितः। यज्ञायज्ञीयमेवात्रान्त्यं स्याद्यामस्यर्क्षु याममतः प्रच्यवेतेति। एतद्धस

खल्वस्य धानञ्जय्यो व्याचष्टे। अथ हस्माह शाण्डिल्यो यज्ञायज्ञीय मेवात्राग्निष्टोमसाम स्यादेतद्वाव सदृशं भवति बृहता भारद्वाजीषु तु दृष्टं भवति यथा बृहत् प्रागाथिकं यथा बृहत् ककुबुत्तरासु यथा बृहदुदात्तगीति यथाबृहद् बहु सदृशं बृहता भवतीति ॥४॥

तृतीयस्यान्होऽग्न आयाह्यग्निभिरित्येष आङ्गिरसः प्रगाथ आङ्गिरसं वैरूपं तस्मिन्त्स्यादन्तारिक्षमग्निष्टोमसामान्तारिक्षस्य लोकेऽग्नो वैरूप मनुकल्पयेत्। तत्सदृशं भवति वैरूपेणाङ्गीरसं नु भवति यथा वैरूपं प्रागाथिकं यथा वैरूपँ सर्वबृहतीषु यथा वैरूपं पञ्चनिधनं यथा वैरूपमध्यर्धेडं यथा वैरूपं निधने अपि सदृशेदशीये भवत उभयत्र ह्येव शिशुप्रवादो भवतीति। तज्जामिस्यादरिष्टेनैडंह्येवारिष्टमैडमन्तारिक्षं यज्ञायज्ञीयमत्रान्त्यं कृत्वाऽनुष्टुभ्यरिष्टमनुकल्पयेद् गौरीवितमेकस्यामरिष्ट मेकस्याँ स्वारं त्वाष्ट्रीसामैकस्यां त्रिणिधनं त्वाष्ट्रीसाम, तिसृष्विति कुर्यादिति। यद्यु वा अरिष्टं तृचस्थं चिकीर्षेदरण्येगेयमिदमपचितमित्यरिष्टत्रिणिधने अन्योऽन्यस्य स्थानं व्यतिहरेत् ॥५॥

चतुर्थस्यान्हो वसिष्ठस्य वैराजमग्निष्टोमसाम स्वास्वग्निं नर इत्येतयोरुत्तरम। तत् सदृशं भवति वैराजेन वासिष्ठं नु भवति यथा वैराजं त्रैपदं यथावैराजमीनिधनं यथा वैराजमनुतुन्नं यथावैराजं पदान्तेऽस्यानुतुदति यथा वैराजस्याथापि वैराजं पृष्ठं वसिष्ठस्य वैराजमग्निष्टोमसाम कः सादृश्यमतो भूयो ब्रूयादिति। तज्जामि स्याद् वात्सप्रेणे निधनंह्येववात्सप्रमीनिधनं वसिष्ठस्य वैराजं यज्ञायज्ञीयमेवात्रान्त्यं कृत्वाऽनुष्टुभि वात्सप्रमनुकल्पयेन्नानदमेकस्यां वात्सप्रमेकस्याँ श्यावाश्वमेकस्यामान्धीगवंतिसृष्विति कुर्यादिति। यद्यु वै वात्सप्रं

तृचस्थं त्रिकौ्षेंन्निधनविभक्तिरपाचितेति वात्सप्रान्धीगवे अन्योऽन्यस्य स्थानं व्यतिहरेत् ॥ ६ ॥

पञ्चमस्यान्होऽग्निं होतारं मन्ये दास्वन्त मित्येता आग्नेय्योऽतिच्छन्दसस्तासुस्युर्नित्यवत्सा अग्निष्टोमसाम । ताःसदृश्यो भवन्ति शक्वरीभिरतिच्छन्दसो नु भवन्ति यथा शक्वर्यस्त्री नाम्न्यो यथा शक्वर्यो गणनाम्न्यो यथा शक्वर्य ऊधस्वत्यो यथा शक्वर्यो वत्सवत्यो यथाशक्वर्योऽथकारवत्यो यथाशक्वर्योऽध्यर्धेडा यथा शक्वर्यः सप्तपदा यथा शक्वर्योऽरण्यगेया यथाशक्वर्यो बहुसदृश्यः शक्वरीभिर्भवन्तीति । तत्रानुष्टुभि यज्ञायज्ञीयमनुकल्पयेद् गौरीवितमेकस्यामृषभः शाक्वरमेकस्यां पदानिधनं शुद्धाशुद्धीयमेकस्यां पार्थं चाष्टदश च पदस्तोभस्य तृचयोर्यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ॥ ७ ॥

षष्ठस्यान्हो वारवन्तीयमग्निष्टोमसाम स्वासुयच्छन्दस्यमाश्वा औ होवेत्येतत् । तद्वारवन्तीयं पृष्ठं वारवन्तीयमग्निष्टोमसाम । कः सादृश्यमतो भूयो ब्रूयादिति तत्रानुष्टुभि यज्ञायज्ञीयमनुकल्पयेत् । गौरीवितमेकस्यां मधुश्चुन्निधनमेकस्यामाकूपारमेकस्यां यन्नवमेऽहनि कौञ्चेतृचयोर्यज्ञायज्ञीयं तिसृष्विति कुर्यादिति ॥८॥

यथा द्वितीयस्यैवं सप्तमस्य । यद्यु ह यज्ञायज्ञीयकारी स्याद् यथा शाण्डिल्यस्य वाचो ऽविक्लृप्तानुष्टुब् यद्यु वै कण्वबृहत्कारी यथा धानञ्जय्यस्य विकल्पयेदनुष्टुभं गौरीवितमेकस्यां कार्तयशमेकस्यामात्रयमेकस्यां यज्ञायज्ञीयं तिसृष्विति कुर्यादिति । यथा प्रथमस्यैवमष्टमस्य । तत्रानुष्टुभि यज्ञायज्ञीयमनुकल्पयेद् गौरीवितमेकस्यामैडं कौत्समेकस्यां

स्वारं कौत्समेकस्यां पराणि तृचेषु यज्ञायज्ञीयं तिसृष्विति कुर्यादिति । यथा द्वितीयस्यैवमेव नवमस्य यद्गु ह यज्ञायज्ञीयकारी स्याद् यथा शाण्डिल्यस्य वाचो ऽविक्लृप्तानुष्टुब् यद्गु वै कण्वबृहत्कारी यथा धानञ्जय्यस्य विकल्पयेदनुष्टुभं गौरीवित मेकस्यां निहव एकस्यामाकूपारमेकस्यां यत् स्वयोनिपराणि तृचेषु यज्ञायज्ञीयं तिसृष्विति कुर्यादिति । अथाग्र एवानुरूपाग्निष्टोमसाम दशममहर्भवत्येतस्माद्वा एतानि योनेरसृज्यन्तेति भवतीति । एषो ऽनुरूपाग्निष्टोमसामा द्वादशाहस्तेनैतेन यजेत् यः कामयेतानुरूपा मा प्रजा जायेतेति जायेतेति ॥९॥

अथातो व्यूढस्य रूपेण समूढो व्यूढस्यैव सामान्ताः समूढस्यैव छन्दाँसि । तेन कोऽर्थ इति । व्यूहेत् समूहेदिति खल्वयं दशरात्रो व्यूहितो भवति सामान्तैर्हास्य व्यूहकाममुपास्यामि छन्दोभिः समूहकामम् । अत्र म उभौ कामावुपाप्तौ भविष्यतो व्यूहकामश्च समूहकामश्चेति । तस्यानिङ्गः प्रथमस्त्र्यहः । चतुर्थस्याह्नः श्यावाश्वशैखण्डिने अन्ते स्याताम् । तदेतच्छ्यावाश्वमाजुहोतेति बहिःस्वारं बहिःस्वारस्य स्थाने सत्रासाहीयस्य श्रत् ते दधामीति शैखण्डिन मीनिधनमीनिधनस्य स्थाने वात्सप्रस्य । संपा च श्येनश्च पञ्चमस्य । सैषा संपा पदानुस्वारा पदानुस्वारस्य स्थाने शैशवस्योभे यदिन्द्र रोदसीइति त्रिणिधनो ग्रामेगेयः श्येनस्त्रिणिधनस्य स्थाने दाशस्पत्यस्य । वार्त्रतुरं च वरुणसाम च षष्ठस्य । तदेतद् वार्त्रतुरं यजामहो वेति बहिःस्वारं बहिःस्वारस्य स्थान इहवतो वामदेव्यस्य घृतवती इति वरुणसामै कृतनिध-

नमेकृतनिधनस्य स्थाने श्रौष्ट्रस्य । तद्दतो वामदेव्यमन्तात् प्रच्यवते तत्पुरा विभक्तिर्निर्भवति तन्माध्यन्दिनायां गायत्रा-मनुगृह्णाति क्रौञ्चमेकस्यामिहवद्वामदेव्यमेकस्यां मार्गीय-वमेकस्यामिति क्रौञ्चस्य लोकं विकल्पयति । अथ यान्येव छन्दोमानाँ समुह्यमानानामार्भवान्त्यानि तान्यार्भवान्त्यान्यपिहि छन्दोमा व्युह्यमाना इडान्ता एव भवन्तीति। माध्यन्दिनान्त्यानि त्वेषां वाङ्निधनानि जागतानि त्रिष्टुप्सु कल्पयेदिति ह स्माह शाण्डिल्यः। प्रवद् भार्गवमुद्वद् भार्गवँ साम्राजमिति। सच्छन्द-स्यानीति धानञ्जय्यः कुत्सस्याधि रथीयँसप्तमस्याह्नोन्त्यं कुर्यात् प्रसेनानीः शूरो अग्रे रथानामित्येतेषां प्रथमं वैश्वज्यो-तिषमष्टमस्य प्र ते धारा मधुमतीरसृग्रन्नित्येतत् वैश्व ज्योतिषमेव नवमस्य प्रहिन्वानो जनिता रोदस्योरित्येतद् यदि पुरा साम्राज-कारी स्याद् यद्यु वा अर्ककारी वात्सप्राणां तृतीयं कुर्याद्धो ई हो ई हो ई जगृह्मा ते दक्षिणमिन्द्र हस्तमित्येतन्नवमादन्होऽर्कः प्रच्यवते तमनुष्टुभ्यनुगृह्णाति तस्योक्तः कल्पः । समापद्यन्ते दशमेऽहनि सामानि यथा छन्दोमदशाहे तथा दशममहस्तस्य तथा सतो गौश्टङ्गं माध्यन्दिनान्त्यं स्यात् तरणिरित् सिषा-सतीत्येतेषामुत्तमं तन्न बहिःस्वारं त्रैष्टुभमकृतं विद्यतेऽथेदं बहिःस्वार मु ह भवति त्रैष्टुभमु गीत्या सम्पद्यते वाजजि-देवात्रान्त्यं स्याद् यज्ञायज्ञीयनिधनं सौहविषं द्विपदास्विति। एष व्यूढस्य रूपेण समूढः स एष व्यूढ एव भवतीति ॥१०॥

अथातः समूढस्य रूपेण व्यूढः समूढस्यैव सामान्ता व्यूढस्यैव छन्दाँसि। तेन कोऽर्थ इति। य एव पूर्वेणेति तस्या-निङ्क्य एव प्रथमस्त्र्यहः । चतुर्थस्याह्नो यामं माध्यन्दिनान्त्यं

स्यादिति ह स्माह शाण्डिल्यो ऽग्नेमृड महाँ असीत्येतयोः पूर्वं वोत्तरं वेति । तृतीयसवनचराणि यामानि भवन्तीति ह स्माह धानञ्जय्यो गोराङ्गिरसस्य साम कुर्यात् कस्य नूनं परीणसी-त्येतयोरुत्तरम् । शैशवमेव पञ्चमस्यायासोमीयं षष्ठस्यायासोम सुक्रत्ययेत्येतत् । अथ यान्येव पृष्ठस्य समुह्यमानस्य माध्य-न्दिनान्त्यानि तान्यत्राभिवान् परिहरेत् सस्तोत्रीयाणि । अथ यान्येव छन्दोमानां व्युह्यमानाना मार्भवान्त्यानि तान्यार्भवा-न्त्यान्यपि हि छन्दोमाः समुह्यमाना इडान्ता एव भवन्तीति माध्यन्दिनान्त्यानि त्वेषां स्वाराणि त्रैष्टुभानि जगतीषु कल्प-येदितिस्माह शाण्डिल्यो वाराहं वासिष्ठं वासिष्ठमिति । सच्छन्दस्यानीति धानञ्जय्य इन्द्रस्यापामीवं सप्तमस्यान्हो ऽन्त्यं कुर्यादिन्द्राय सोमसुषुतः परिस्रवेतेत्येतयोः पूर्वं वायो-रभिक्रन्दोऽष्टमस्यैतयोरेवोत्तरं सिमानां निषेधो नवमस्याचो-वाहा इत्येतन्नवमादह्नो ऽर्कः प्रच्यवते तं बृहत्यामनुगृह्णाति तस्योक्तः कल्पः कर्मणि । न समापद्यन्ते दशमेऽहनि सामान्यौ शनकावे पत्रात्रान्ते स्याताम् । तदतो गौरीवितमन्तात् प्रच्यवते तद् बृहत्यामनुगृह्णात्युत्सेध एकस्यां गौरीवितमे-कस्याँ रौरवमेकस्या मित्युत्सेधस्य लोकं विकल्पयति । तदत्र स्वारं कावमन्त्यँ स्वारं वामदेव्यमग्निष्टोमसाम तदर्थसन्नि-पतितं जामि विद्यात् तन्न वारणमिव कुर्वीतार्थमत्र बलीयाँ-सं जामितायां मन्येतेति । एष समूढस्य रूपेण व्यूढः स एष समूढ एव भवतीति ॥ ११ ॥

अथातः समूढस्य रूपेण समूढः समूढस्यैव सामान्ताः समूढस्यैव छन्दाँसि । तेन कोऽर्थइति । उभौ खल्विमौ पूर्वौ

दशरात्रौ व्यावीवतत् सामान्तानेवान्यतरस्य व्यौहीच्छन्दाँस्यन्यतरस्याथेहोभ्यामेव समूढं भविष्यति सामान्ताश्चैव छन्दाँसि चैष वै कुशलमूढो य उभयतः समूढ इति। तं हस्मैतं धानञ्जय्यो व्याचष्ट ज्योतिष्टोमस्य समूहेन समूढ इति। तस्यानिरुक्तः प्रथमो त्र्यहः। तृतीयादह्न उद्धृत्य त्रिणिधनं त्वाष्ट्रीसामैडं त्वाष्ट्रीसाम तस्य स्थानेऽनुकल्पयेत्। उद्धृत्यारिष्टँस्वारं साम्राजं तस्य स्थानेऽनुकल्पयेत्। उक्तः पृष्ठ्यस्य समूढः। अथ यान्येव छन्दोमानां समुह्यमानानां माध्यन्दिनान्त्यानि तानि माध्यन्दिनान्त्यानि। आर्भवान्त्यानि त्वेषाँ स्वाराणि जागतान्येतान्येवेन्द्रस्यापामीवं वायोरभिक्रन्दः सिमानां निषेध इति। सप्तमस्याह्न उद्धृत्य सौहविषं जराबोधीयं तस्य स्थानेऽनु कल्पयेच्छन्दोमेडामनुजिघृक्षन् मा मे रूपं निरिड आर्भवो भूदिति। नवमादह्नोऽर्कःप्रच्यवते तमनुष्टुभ्यनुगृह्णाति तस्योक्तः कल्पः। समापद्यन्ते दशमेऽहनि सामानि यथाछन्दोमदशाहे तथा दशममहरिति। एष समूढरूपेण समूढः स एष समूढ एव भवतीति। अथातो व्यूढस्य रूपेण व्यूढः। व्यूढस्यैव सामान्ता व्यूढस्यैव छन्दाँसि। सोऽयमेव द्वादशाहो ऽयमिम मधीमहे ॥१२॥

अथातः संक्रमद्वादशाह इत्याचक्षते ऽपि च समात् समतर इति। यानि त्र्यहाणां प्रथमान्यहानि स प्रथमस्त्र्यहः। यानि द्वितीयानि स द्वितीयः। यानि तृतीयानि स तृतीयः। दशममेवदशममहः। किमुपाशोऽयं भवतीति। त्र्यहशः खल्वयं पुरा दशरात्रः समतां लभते स यथा मेऽहरहश्च समतां लभते

न्यहशश्च तथा करवाणीति। यदवसानःपूर्व स्त्र्यहस्तत प्रभृत्यु-त्तरोऽथेह यदवसानं पूर्वमहस्तत् प्रभृत्युत्तरं भविष्यतीति। तं यत् संक्रमद्वादशाह इत्याचक्षते। यन्नूनमेतत् सामाक्रान्तानी-वाहानि भवन्ति यदु समात् समतर इति। पूर्वः खल्वयं दशरात्रः समस्तस्मादप्ययं समतर एव भवतीति ॥१३॥

अथापरे चत्वारो भवन्ति। अग्निष्टुद् इन्द्रस्तुत् सूर्यस्तुद् वैश्वदेवस्तुदिति। आग्नेयेषु प्रगाथेषु छन्दोमानां ब्रह्म-सामानि कल्पयेद् बार्हतेषु सोऽग्निस्तुत् तेनैतेनान्नाद्यकामो यजेताग्निरन्नाद्यस्य प्रदातेति हि भवतीति। ऐन्द्रेषु प्रगाथेषु छन्दोमानां ब्रह्मसामानि कल्पयेद् बार्हतेषु स इन्द्रस्तुत्। तेनैतेन राजा संग्रामी वा बलकामो वा यजेतेन्द्रोहि राज्य स्येष्ट इति हि भवतीति। सौर्येषु प्रगाथेषु छन्दोमानां ब्रह्म-सामानि कल्पयेद् बार्हतेषु स सूर्यस्तुत्। तेनैतेन यजेत यो वा यज्ञे मुह्येद् यस्य वा यज्ञः सामि विलुप्येत सूर्योऽप्रज्ञातस्य प्रज्ञातेतिहि भवतीति। वैश्वदेवेषु प्रगाथेषु छन्दोमानां ब्रह्म सामानि कल्पयेद् बार्हतेषु स वैश्वदेवस्तुत्। तेनैतेन प्रजाति-कामो यजेत विश्वे हि देवा प्रजातेरीशत इतिहि भवतीति। स यच्छन्दोमानेव विकरोत्येते यथाकामकल्पतराः पृष्ठ्याद् भवन्ति। यदु ब्रह्मसामानि। एतानि ह्यशीर्धानानीव भवन्तीति ॥१४॥

अथापरे दश भवन्ति। यथास्तोमं प्रथममहस्तथास्तोमो ऽयँ सर्वो दशरात्रः स्यात्। तेनैतेन तेजस्कामो ब्रह्मवर्चसकामो वा यजेत। यथा द्वितीयं तेनौजसकामो वीर्यकामो वा। यथा तृतीयं तेन प्रतिष्ठाकामः प्रजातिकामो वा। यथा

चतुर्थं तेन प्रतिष्ठाकामः। यथा पञ्चमं तेन पुष्टिकामः परं वा जिघाँसन्। यथा षष्ठं तेन प्रतिष्ठाकामः। यथा सप्तमं तेन तेजस्कामो ब्रह्मवर्चसकामो वा। यथाऽष्टमं तेनौजस्कामो वीर्यकामो वा। यथा नवमं तेन प्रतिष्ठाकामः प्रजातिकामो वा। यथा दशमं तेन तेजस्कामो ब्रह्मवर्चसकामः प्रतिष्ठाकामः प्रजातिकामो वैव। प्राजापत्यं दशममहरिति हि भवतीति ॥१५॥

अथातोऽनन्ता द्वादशाहा इति प्रदिशन्ति। यावन्त्यृक्सामानि तावन्तो द्वादशाहास्ततो वा भूयाँसः। तेषामाहारं कल्पयेत्। स यदा सर्वा ऋचः सम्मीयात् सर्वान्त् स्तोमान्त्सर्वाणि पृष्ठानि सर्वाणि सामान्यथैकतृचमाहृत्यान्यस्य स्थानेऽनुकल्पयेत् तत एव सोऽन्यः कल्पो भवतीति। पश्यामो हि वयमेकतृचेनैवाप्यन्यं कल्पं भवन्तं यथा भवति। एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो यजेतेति। अपि वैकस्तोममेवाहृत्यान्यस्य स्थानेऽनुकल्पयेत् तत एव सोऽन्यः कल्पो भवतीति। पश्यामो हि वयमेकस्तोमेनैवाप्यन्यं कल्पं भवन्तं यथा भवति। एतस्यैवैकविंशँशमग्निष्टोमसाम कृत्वामयाविनं याजयेदिति। अपि वा प्रतिपदावेवान्योऽन्यस्य स्थानं व्यतिहरेत् स्तोमौ वा कल्पौ वा तन्त्रे वा पृष्ठे वा संस्थे वा सामनी वा तत एव सोऽन्यः कल्पो भवति। एतेन प्रदेशेनावर एवान्तो द्वादशाहानां विद्यते न पर इति न पर इति ॥१६॥

इति क्षुद्रसूत्रे तृतीयः प्रपाठकः।

इति क्षुद्रसूत्रं समाप्तम्॥

# विद्या भाण्डार—ग्रन्थमाला ।

विद्या की वृद्धि चाहने वाले महानुभाव यह पढ़ कर प्रसन्न होंगे, कि उक्त नाम की एक नई ग्रन्थमाला छपनी आरम्भ हुई है, जिस में संस्कृत और हिन्दी भाषा के वे ग्रन्थ छपा करेंगे, जो (१) उच्च कोटि के ग्रन्थ हैं, और अभी तक बिन छपे पड़े हैं (२) हिन्दी भाषा के नवीन ग्रन्थ जो, धर्म, नीति, इतिहास, विज्ञान और समाजशास्त्र के विषय में उच्च कोटि की शिक्षा दें, ये उस २ विषय के धुरन्धर पण्डितों से तय्यार करवाए जायेंगे । (३ शास्त्रों के गूढ़ अर्थों के खोलने वाले ग्रन्थ । (४) वेदशास्त्र के पठन पाठन को सरल बनाने वाले ग्रन्थ ।

## नियत ग्राहक ।

१) रुपया प्रवेश शुल्क देकर हरएक पुरुष इसका नियत ग्राहक हो सकता है । नियत ग्राहक को ग्रन्थमाला के हर एक पुस्तक पर २५) प्रति सैंकड़ा कमीशन मिलेगा ।

मूल्य हर एक पुस्तक का अलग रहेगा, और एक वर्ष में चार रुपये तक के पुस्तक भेजने का अधिकार होगा ।

आशा है, धर्म और विद्या के अनुरागी सज्जनजन इसके नियत ग्राहक बनकर लाभ उठायेंगे ।

पं० राजाराम प्रोफेसर डी. ए. वी. कालेज लाहौर ।